**परस्परविरुद्धार्था कथमेकत्र सा भवेत् ॥३४०॥**

**यदि[2] एष नियमो वाच्येन वस्तुना विना शब्दो न प्रवर्त्तेत[1] इति भिन्नेषु प्रवादेषु एकत्र वस्तुनि विरुद्धस्य स्वभावस्योपसंहारेण वृत्तिर्न स्यात्। न ह्यस्त्यय सम्भवो यदेकः शब्दो निःपर्यायं नित्यश्च स्यादनित्यश्चे[3]ति।**

वस्तुभिर्न्नागमास्तेन कथञ्चिन्नान्तरीयकाः।
प्रतिपत्तुर्न्न सि[ध्यन्ति] कुतस्तेभ्यो[ऽर्थनिश्च]यः ॥३४१॥

**आगमस्य प्रमाणं तदार्दशिता[4]र्थप्रतिपत्तयेऽज्ञो जनः समन्विष्यति। समधिगतयाथातथ्यानां उपदेशानपेक्षणात्। अतीन्द्रियगुणपुरुषस्य विवेचनेऽसामर्थ्यात्[5]।**

---

एवमित्यादिना प्रतिविधत्ते। **एवं सतीति** यद्यर्थवशेनैव वचनप्रवृत्तेस्सर्वा वचनप्रवृत्ति सत्यार्था .. [5]दैकत्राभिधेये आगमभेदेन **परस्पर विरुद्धार्था सा** वचनवृत्ति **कथम्भवेत्**। नैव भवेत्। सर्वप्रवादेष्वेकार्थैव भवेदिति यावत्।

**यदीत्यादिना** व्याचष्टे। **यद्येष नियमो** वाच्यम्वस्त्वन्तरेण **वाच्येन वस्तुना विना शब्दो न प्रवर्त्तेत इति** तदा परस्परविरुद्धार्थाभिधानाद् **भिन्नेषु प्रवादेषु** सिद्धान्तेष्वे**कत्र वस्तुनि**। नित्यानित्या [दे.... ...वि][6]रुद्धस्य **स्वभावस्योपसंहारेण** समारोपेण वचनवृत्तिर्न **स्यात्**। यतो **न ह्यस्त्यय सम्भवो यदेक. शब्दो निःपर्यायमिति** प्रकारान्तरेण विनेत्यर्थ.। **नित्यश्च स्यादनित्यश्चेति**। शब्दग्रहणमुपलक्षणार्थ (।) तेन घटादिरपि नि पर्यायन्नित्यश्च। नित्यश्च न सम्भवत्येव।
217a भवति च कस्यचित् प्रवादे नित्य शब्द इति [व ... ][7]त्तिरन्यस्यानित्य इत्येव सात्मको निरात्मक इत्यादि।

तस्मान्नास्ति शब्दाना बाह्यैरर्थैस्सह सम्बन्ध ।

यत एवन्**तेन** कारणेन **प्रतिपत्तुः** पुरुषस्य। **वस्तुभिः सहागमा नान्तरीयका** अविनाभाविनो [न कथचित्प्रनिपत्त· सिध्यन्ति **तत्कुस्तेभ्य**] आगमेभ्यो वस्त्वनान्तरीयकेभ्यो[**र्थनिश्चयो** न वा निश्चय । **आगमस्य प्रमाणा**][1] न सर्वोन्वेषते किन्त्व**ज्ञो जनः**। **समन्वेषते** किमर्थ (।) **तदादर्शितार्थप्रतिपत्तये**। नेनागमेनोपदर्शितस्यार्थस्य **प्रति**पत्त्यर्थं। किङ्कारणमज्ञ एव समन्वेषते नान्य इत्याह। **समधिगत याथातथ्य** पदार्थानामविपरीत रूप यैस्तेषामधिगतपरमार्थाना परोप**देशानपेक्षणात्**। येनाप्यज्ञेनान्वेषणीन्तस्य [ . ा][2] तीन्द्रिया गुणा यस्य पुरुषस्य **सोतीन्द्रियगुणः** (।) पश्चात् पुरुषशब्देन विशेषणसमास । तस्य **पुरुषस्य विवे-**

---

[1] Mthon-pa-mi-śes-pa.

**समीहितार्थसत्तामन्तरेण वाक्यानां वृत्ति अजानतां)**[1] **अदृष्टव्यभिचारवचसामपि पुंसां वाचि किमियं यथार्था नेति वेति भवितव्यमेव शंकया ।**[6] **तेन न युक्तं अनेन कस्यचित् किञ्चिदपि निश्चेतुम् ।**

**अस्य ।**

तस्मा[न्न तन्निवृत्त्यापि वस्त्वभा]वः प्रसिध्यति ।

**यदुक्तं, सर्वविषयत्वादागमस्य,** सति वस्तुनि[7] **अविसंवादेनास्य प्रवर्त्तनात्,** 535a
**तन्निवृत्तिलक्षणानुपलब्धिरभावं** साधयिष्यतीति। **तच्चास्य सर्वविषयत्वमस्ति। वस्त्वन्तरेणावृत्तौ स्यात्** । ततः प्रतिपत्तुकामस्याभिमता सिद्धिरित्युक्तम् ।[2]

तेनासन्निश्चयफलाऽनुपलब्धिर्न सिध्यति ॥ ० ॥३४२॥

**तस्मान्न प्रमाणत्रयनिवृत्तावपि विप्रकृष्टेष्वर्थेष्वनिश्चयः ।**

**वेदप्रमाण्यं कस्यचित् कर्तृवादः स्नाने धर्मेच्छा जातिवादावलेपः । सन्तापा-**

---

**चने**ऽयं सर्वज्ञो नान्यो वा वितथाभिधायीत्येव विभागक्रियायाम**सामर्थ्यात्**। तत्कुतस्तथाभूतपुरुषप्रणीत वचनमागमत्वेन निश्चित्य प्रवर्त्तेत।

न च सर्वस्य सर्वाणि वचनानि यथार्थ प्रवर्त्तमानानि पर. [3]
ना च **समीहितो**भीष्टो **योर्थ**स्तस्य **सत्तामन्तरेणापि वृत्ति**म्पश्यतः प्रतिपत्तुः पुरुषस्य **भवितव्यमेव वाचि शंकया। किमियं यथार्था** वाङ् **नेति वेति**। केषा **वाचि। अदृष्टव्यभिचारवचसामपि।** शक्यविचारे वस्तुन्यदृष्टव्यभिचार वचो येषान्तेषामपि वाचि। अपिशब्दाद् दृष्टव्यभिचारवचसामपि वाचि सुतरा शकया . ....... ....[4] येन शका **तेन** कारणेन **न युक्तमनेना**ज्ञेन प्रतिपत्त्रा **कस्यचित्** पुरुषस्य वचनेन **किञ्चिद्** वस्तु **निश्चेतुं**। यतश्चानिश्चयस्तस्मादस्य प्रतिपत्तेस्त**न्निवृत्त्या**प्यागमनिवृत्त्यापि प्रतिषेध्याभिमतस्य भावस्याभावो न **प्रसिध्यति।**

**यदुक्त**मित्यादिना व्याचष्टे। यदुक्त प्राक् (।) **सर्वविषयत्वादागमस्य सति वस्तुन्यवि**[सम्वादेना. .][5] करणात्। **तन्निवृत्तिलक्ष**णेत्यागमनिवृत्तिलक्षणा**नुपलब्धिः** स्वभावादिविप्रकर्षिणोप्यर्थस्याभावं साधयिष्यतीति। **तदि**त्यभावनिश्चायकत्व**मस्ये**त्यागमस्य नैवास्यागमस्य। **सर्वविषयत्वमस्ति**। पुरुषार्थसम्बद्धानामर्थानामविषयीकरणात्।

अभ्युपगम्याप्युच्यते। आगमस्य सर्वविषयत्वे [पि यदि [6]यद्य]

---

[1] Restored

**रम्भः पापहानाय चेति ध्वस्तप्रज्ञा(नां पञ्च)लिङ्गानि जाड्ये ॥**

[1] **(महानैयायिकेन सकलभूतलवादीभशिरःविक्रमसिंहेनाशेषदिङ्मधुरकीर्तिना आचार्यश्रीधर्मकीर्त्तिना निबद्धा प्रमाणवार्त्तिकप्रथमपरिच्छेदवृत्तिः समाप्ता। मगलम्।)**

---

वृत्ति स्यात्तदा **वस्त्वन्तरेणावृत्तो** सत्या स्यादागमनिवृत्तिलक्षणस्यानुपलम्भस्याभावनिश्चायकत्व (।) तच्च नास्ति वस्त्वन्तरेणाप्यागमस्य वृत्ते.।

एव च सति **ततोर्थव्यभिचारिण आगमात् प्रतिपत्तुकामस्य पुसोभिमतार्थासिद्धिरित्युक्त**। तेन कारणेन विप्रकृष्टेष्वसन्निश्चयफलेत्यसद्व्यवहार [विष

217b . . ][7] न सिध्यति।

**तस्मान्न प्रमाणत्रयनिवृत्तावपि** प्रत्यक्षानुमानागमसञ्ज्ञितस्य प्रमाणत्रयस्य निवृत्तावपि देशकालस्वभाव**विप्रकृष्टेष्वर्थेष्वनिश्चय** इत्युपसहार ।

अयुक्ताभिधायित्वे दिङ्मात्रन्तीर्थिकानान्दर्शयन्नाह।

(१) **वेद** इत्यादि। इति शब्दो वादशब्दश्चात्र वक्ष्यमाणकस्सम्बन्धनीय । तेनायमर्थ (।) **वेदप्रामा[ण्य जाड्ये]**[1] लिङ्ग।

ननु गुणेन षष्ठीसमासप्रतिषेधाद् वेदस्य प्रामाण्यमिति भवितव्य।

नाय दोषो लोकप्रसिद्धानाम्विशिष्टानामेव गुणानान्तत्र ग्रहणात्। अस्य च लिङ्गमधिकरणैतावत्व इत्यादिको निर्देश ।

(२) **कस्यचित्** नै या यि का देरीश्वरस्तत्त्वादीना **कर्त्तेत्ययमपि** वादो जाड्ये **लिङ्ग**।

(३) तीर्थ**स्नाने धर्मेच्छा** जाड्यलिङ्गमप[र ][2] मोहादिस्तज्जनित च कायवाक्कर्म्म धर्मस्तद्विपरीतञ्च जलसश्लेषमात्रलक्षण स्नानमिति कुतस्ततो धर्मप्राप्ति । विस्तरेण निराकृतश्चायन्तीर्थस्नानवाद आचार्य व सु ब न्धु प्रभृत्तिभिरिति नेह प्रतन्यते।

(४) शीलादिगुणवैकल्येपि ब्राह्मणोहमिति **जातिवादेनावलेपो** दर्पो जाड्यलिङ्गमयुक्तत्वात्। [तथा हि प्र गृ][3]हीत्वा जातिवादावलेप स्यात्। ब्राह्मणेन पित्रा ब्राह्मण्या गर्भे य उत्पादस्त वा समाश्रित्य। तत्र वस्तुभूतसामान्यनिषेधान्न पूर्व पक्ष । नाप्युत्तर ब्राह्मणब्राह्मणीशरीरयोरशुचिस्वभावत्वेन शरीरान्तरादविशेषात्।

---

[1] Restored.

(५) अनशनादिना शरीरपीडन **सन्तापस्तस्यारम्भोनुष्ठान** **पापहानाय**। **पापस्य** [ . ][4] **जाड्ये** लिङ्ग। तथा हि (।) **सर्वस्य** **पापस्य** निदान लोभद्वेषमोहा । तैश्चाविरुद्ध सन्तापारम्भ इति कुतस्तेन पाप-शुद्धि·।

एतानि **पंच लिङ्गानि जाड्ये**। किंविशिष्टे जाड्ये। **ध्वस्तप्रज्ञाने**। प्रमाणावलम्विज्ञान प्रज्ञानन्तद् ध्वस्त यस्मिन् जाड्ये तत्तथोक्त। न्यायानुसारिज्ञान रहित इत्यर्थ·। यथास्थलमुपादानात् पञ्चेत्युक्तम [5] लिङ्गानीति ॥०॥

भट्टोद्योतकरादिषु प्रविचयो येषा महान् विद्यते
सद्वस्त्वाकरधर्मकीर्तिजलधेरन्तर्निमग्नम्मन ।
पौर्वापर्यविमर्षिणी स्मृतिरल प्रज्ञापि चोत्कर्षिणी
यत्किञ्चिद् गदिन्तदत्र निपुणैस्तैरेव विज्ञास्यते ॥
अर्थोत्खातपरम्परासु महती वाच प्रसन्नात्मता
यस्यामन्यसुभाषिताऽ [ . . ][6]ति ।
दर्पाध्मात (?) समस्ततीर्थिकमतध्वसश्च म (वेद्य) ते
टीकेय सुविलक्षणोदितधियामावर्जनीया कथमिति ॥०॥

क ण र्ण क गो मिविरचितायाम्प्रमा (णवार्त्तिकवृत्ति
. प्रमाण )॥०॥

# परिशिष्टम् (१)

## नाम-सूची

